| प्रकरणं | पृष्ठे | पंक्तौ |
|---|---|---|
| बद्ध[illegible]ां पाण्डवानांयुद्धं | ७४३ | १९ |
| अर्ज्जुनइन्द्रजालास्त्राणिगन्धर्व्वान्ससर्ज्ज | ७४४ | ५ |
| त्रासितान् गन्धर्व्वान् दृष्ट्वाचित्रसेनोऽर्ज्जुनमधा बद्धदामादाय ... ... ... | ७४४ | ८ |
| अर्ज्जुनेनगदांछिन्नां दृष्ट्वाचित्रसेनोदेवास्त्राणि ससर्ज्जअर्ज्जुनोऽपिदेवास्त्रैर्देवास्त्राण्यवार यत् ... ... ... ... | ७४४ | ९ |
| चित्रसेनं माययान्तर्हितं प्रहरन्तमर्ज्जुनोऽम न्त्रितदेवास्त्रैः प्रजहार ... ... | ७४४ | १२ |
| अर्ज्जुनं शब्दवेधाद्यस्त्रैस्ताडितश्चित्रसेनः सखा त्मानमदर्शयत् ... ... ... | ७४४ | १४ |
| अर्ज्जुनःसखायंदृष्ट्वास्त्राणिसञ्जहारगन्धर्व्व पराभवः ... ... ... | ७४४ | १५ |
| अर्ज्जुनः सखायं चित्रसेनमाहस्म त्वं कथंकौर वनिग्रहेप्रवृत्तइत्यादि ... ... | ७४४ | २१ |
| दुर्य्योधनं कर्णादिभिः पाण्डवान् स्वैश्वर्य्यंदर्श यितुमागतं बद्धानयेतीन्द्रादिष्टएत्य बबन्ध बद्धमेनंस्वर्नेष्यामीतिचित्रसेनआह स्मार्ज्जुनं ... ... ... ... | ७४४ | २३ |
| अर्ज्जुनआहस्ममभ्रातादुर्य्योधनः सपरि वारोमुच्यतामिति ... ... | ७४४ | २९ |
| पापीयंनमोचनार्थं:द्रौपद्यायुधिष्ठिरस्य क्रोष्टा तयोः साचाद्यथेच्छंसितथाकुर्व्वित्य र्ज्जुनंचित्रसेन आहस्म ... ... | ७४४ | ३० |
| सर्व्वेयुधिष्ठिरमाजग्मुस्ततोयुधिष्ठिरोदुर्य्योधना दीनमोचयिद्गन्धर्व्वान् प्रशशंसचवलिभिर्यु क्ताभिःपापोदुर्य्योधनोनहिंसितइत्याद्या हस्मच ... ... ... ... | ७४५ | |
| अनुज्ञातास्चित्रसेनादयइन्द्रंययुरिन्द्रोऽपियुधि मृतान् गन्धर्व्वानजीवयत् | ७४५ | ७ |
| युधिष्ठिरोमुक्तं दुर्योधनमेवंसाहसंनकार्य्यं गृहंगच्छेत्याद्यादिदेश ... ... | ७४५ | ११ |
| अनुज्ञातस्य दुर्योधनस्यपुरगमनं ... ... | ७४५ | १४ |
| अवनिपोदुर्योधनस्तथावमानितः कथंस्वपुरं विवेशेत्यादि जनमेजयप्रश्नः ... | ७४५ | १९ |
| दुर्योधनोमानीतथावमानितः कुत्रचित् सुहृष्णजलदेशेयानानिविमुच्ययथास्थानं न्यवेशयदित्यादिवैशम्पायनवचनं ... | ७४५ | २३ |
| अज्ञातपराभवादिंदुर्य्योधनंमोदन्तमित्युपला यितःकर्णआहस्मदिष्ट्याजीवसीत्यादिअहं विद्रुतस्त्वयागन्धर्व्वाश्चजिताइत्यादिच | ७३५ | २७ |
| दुर्योधनःकर्णंस्वपरिभवादिसर्व्वमाहस्म | ७४६ | ४ |
| अस्मान् विमोच्यार्ज्जुनश्चित्रसेनंयदाहस्म तदपि ... ... ... | ७४६ | २४ |
| अत्यनुतप्तोदुर्योधनोदुःशासनंराज्येऽभिषेक्तुमा दिश्यप्रायोपवेशनमियेष ... ... | ७४७ | १ |
| अनुतापादिश्रुत्वादुःशासनोदुर्योधन माहस्म नाहंराजाभवामीत्यादि ... | ७४७ | २१ |
| कर्णोप्याहस्मदुर्योधनंत्वद्विषयवासिनःप्रजाश्च पाण्डवाउपाकुर्व्वन्तितेन कःखेदइत्याद्यनु रञ्जनं ... ... ... .... | ७४८ | ६ |
| प्रायोपविष्टंदुर्योधनं शकुनिरपि कर्णानुरञ्ज नमनुमोदयन्नाहस्म ... ... ... | ७४८ | २१ |
| भ्रात्राद्यमात्यैस्तथाबोधितोऽपिदुर्योधनोनप्रा योपवेशाद्विचाल्यते ... ... | ७४९ | ७ |
| वृथाविधिप्रायोपवेशनंकुर्व्वन्तंदुर्योधनंज्ञात्वा दानवाआगताः ... ... ... | ७४९ | ८ |
| अथर्व्वविधिनादानवाः क्रियाः प्रावर्त्तयन् | | |

| प्रकरणं | पृष्ठे | पंक्तौ |
|---|---|---|
| पाताले ... ... ... ... | ७४९ | ११ |
| साङ्गवेदपारगा विप्रा अग्नौ जुह्वन्तः कृत्यां समुदस्थापयन् ... ... ... | ७४९ | १४ |
| दानवाः कृत्यां प्रायोपविष्टं दुर्य्योधनमानेतुमादिदेश ... ... ... | ७४९ | १४ |
| सा कृत्या निमेषार्द्धेन दुर्य्योधनमादाय रसातलं प्रविवेश ... ... ... | ७४९ | १५ |
| तत्र दानवा बहुविधवचोभिर्दुर्य्योधनं प्रायोपवेशान्निवर्त्तयन् ... ... ... | ७४९ | २२ |
| दानवैः प्रायोपवेशान्निवर्त्त्य राज्याय विसृष्टं दुर्य्योधनं सैव कृत्या तत्स्थानमनयत् | ७५० | १८ |
| कृत्यास्तत्स्थलाद्दुर्य्योधनानुज्ञाताऽन्तरधीयत | ७५० | १९ |
| कृत्यायां गतायां दुर्य्योधनः स्वप्नवत् सर्व्वं लक्ष्यावनवासादागमिष्यतः पाण्डवान् जेष्यामीति कर्णादिभिः परामृष्य ससैन्यस्सर्द्धिर्हस्तिनापुरं प्रविवेश ... ... | ७५० | २१ |
| वने वसत्सु पाण्डवेषु धार्त्तराष्ट्राः किमकुर्व्वन्निति जनमेजयप्रश्नः ... ... | ७५१ | १६ |
| भीष्मो दुर्य्योधनं भर्त्सयामास मन्त्रिभिर्भवत्वित्याहस्मच इत्यादि वैशम्पायनवाक्यं ... | ७५१ | १८ |
| भीष्मेण मन्त्रिभिर्भवत्वित्युक्ते सशकुनिर्दुर्य्योधनः प्रहस्य प्रतस्थे ... ... ... | ७५१ | २६ |
| भीष्मात् प्रस्थितं दुर्य्योधनं कर्णदुःशासनादयः आजग्मुः भीष्मस्तु लज्जितः स्वगृहं विवेशेत्यादि | ७५१ | २७ |
| भीष्मे गते दुर्य्योधनो मन्त्रिभिर्मन्त्रयामास | ७५१ | २९ |
| दिग्विजयार्थं दुर्य्योधनं प्रति कर्णवाक्यादि | ७५२ | १ |
| ततः कर्णो महाबलावृतो द्रुपदपुरं रुद्ध्वा वशीकृत्य द्रुपदात् तदनुगेभ्यो राजभ्यश्च | | |

| प्रकरणं | पृष्ठे | पंक्तौ |
|---|---|---|
| करादि अग्राह ... ... ... | ७५२ | १६ |
| ततः कर्णस्योत्तरादिदिग्विजयादि ... | ७५२ | १९ |
| कर्णस्य हस्तिनापुरागमनं ... ... | ७५३ | ७ |
| कर्णप्रशंसापूर्व्वं दुर्य्योधनवाक्यं ... ... | ७५३ | ८ |
| ततो हाहाकारशब्दोऽभूत् केचित् कर्णं स्तुवन्ति केचिन्निन्दन्ति केचिन्मूकाइत्यादि | ७५३ | १४ |
| ततः सर्व्वदिग्जयी कर्णः प्रचुरधनं गृहीत्वा धृतराष्ट्रं जगाम स तमाश्लिष्य प्रशशंस | ७५३ | १६ |
| कर्णो दुर्य्योधनमाहस्म सर्व्वभूमिपतिस्त्वमिमां पृथ्वीं पालयेत्यादि वैशम्पायनोक्तिः | ७५३ | २२ |
| कर्णं दुर्य्योधनो राजसूयचिकीर्षां ज्ञापयामास | ७५३ | २६ |
| कर्ण आहस्म दुर्य्योधनं सर्व्वे नृपास्तव वश्या राजसूयकरणे योग्यस्त्वमिदानीं द्विजवरा आहूयन्तां ... ... ... | ७५३ | २९ |
| ऋत्विक् दुर्य्योधनमाहस्म कृतराजसूये सपितृके सति राजसूयः कर्त्तुमशक्यः राजसूयतुल्यो लाङ्गलयागः क्रियतामित्यादि | ७५४ | ५ |
| ऋत्विजैवमुक्तो दुर्य्योधनो भ्रात्रादीनाहस्म ब्राह्मणैर्यदुक्तं तन्मह्यं रोचते युष्मभ्यं किमित्यादि ... ... ... | ७५४ | १५ |
| विदुरादयो धृतराष्ट्रं लाङ्गलयागं चिकीर्षन्तं दुर्य्योधनं न्यवेदयन् ... ... | ७५४ | १९ |
| लाङ्गलयागप्रवर्त्तने धृतराष्ट्रादयः सर्व्वे हृष्टा निमन्त्रणाय दूतान् प्रेषयामासच दुर्य्योधनः ... ... ... | ७५४ | २२ |
| कश्चिद्दूतं दुःशासनो द्वैतवने पाण्डवान् तत्र स्थितान् ब्राह्मणांश्च निमन्त्रयितुं प्रेषयत् | ७५४ | २५ |
| स दूतो गत्वा पाण्डवानाहस्म दुर्य्योधनो | | |

| प्रकरणं | पृष्ठे | पंक्तौ |
|---|---|---|
| लाङ्गलयोगे युष्मानिमन्त्रयतीत्यादि | ७५४ | २६ |
| श्रुत्वा युधिष्ठिर आहस्म त्रयोदशवर्षमध्ये हस्तिनापुरं गन्तुमसमर्था वयमित्यादि | ७५५ | |
| भीम आहस्म दूतं यदाऽस्त्रशस्त्रप्रदीप्ते रण सत्राग्नौ दुर्य्योधनं पातयिष्यति तदा राजागमिष्यतीत्यादि ··· | ७५५ | |
| शेषाः पाण्डवाः किमपि नोचुः ··· | ७५५ | |
| स दूतो दुर्योधनं सर्व्वं न्यवेदयत् | ७५५ | |
| तत्र यज्ञे राजानो दिशाश्चागता हृष्टाऽभवन् धृतराष्ट्रादिष्टो विदुरस्तत्रागतान् ब्राह्मणादीन् वस्त्रादिभिरन्नादिभिश्चानर्च ··· | ७५५ | ८ |
| ब्राह्मणान् राज्ञश्च वसु दत्त्वा सन्तोष्य वि सर्ज्य कर्णादिभिः सह दुर्योधनः पुरं जिगमिषतिस्म ··· ··· ··· | ७५५ | १३ |
| प्रविशन्तं दुर्योधनं वन्दिनस्तुष्टुवुर्जनाश्च अपरे ऊचुः युधिष्ठिरस्य क्रतोः षोडशीं कलामपि नायमर्हतीत्यादि ···· ··· | ७५५ | १७ |
| केचिदाकृयर्यातिमरुत्तमान्धात्रादिक्रतु रिति ··· ··· ··· ··· | ७५५ | २१ |
| पितरौ भीष्मादींश्चाभिवादयन्दुर्योधनः पुरं विवेश ··· ··· ··· | ७५५ | २२ |
| आसीनं दुर्योधनं कर्ण आहस्म राजसूये त्वामहं योजयिष्यामीति सोऽपि तथा ऽनुमेनाद ···· ···· | ७५५ | २५ |
| दुर्योधन आहस्म पाण्डवान्निहत्य राजसूयं कदा हरिष्यामीति ·· ··· | ७५६ | १ |
| कर्ण आहस्मार्ज्जुनमहत्वा पादौ न क्षालयिष्यामि जलजं न खादयेयं याचितो नास्तीति न वक्ष्यामीत्यादि ··· ··· | ७५६ | |
| तथाप्रतिज्ञानामं कर्णं सचिरं श्रुत्वा धार्त्तराष्ट्राः पाण्डवान् विजितानमन्यन्त · | ७५६ | ५ |
| दुर्य्योधनोऽन्ये च, वेश्म जग्मुः ··· · | ७५६ | ५ |
| पाण्डवाः कर्णप्रतिज्ञां दूतमुखाच्छ्रुत्वा विविग्नाः ··· ··· ··· · | ७५६ | |
| पाण्डवा द्वैतवनं त्यक्तुमीषुः । सामात्यो दुर्य्योधनः सुखी भूरिदक्षिणैः क्रतुभिर्द्विजांस्तोषयामास दत्तभुक्तफलं धनमिति बुबोध च घोषयात्रापर्व्वसमाप्तिः ··· | ७५६ | १० |
| मृगस्वप्नोद्भवपर्व्वारम्भः ··· ··· | ७५६ | १६ |
| रात्रौ स्वप्ने दर्शयन्तो मृगा युधिष्ठिरमूचुस्तत्र भ्रातृभिरस्माद्वंशक्षयः कर्त्तुमारब्धः स्थानान्तरं | ७५६ | १८ |
| दयालुर्युधिष्ठिरस्तथा चकार ··· ··· | ७५६ | २४ |
| युधिष्ठिरो मरुभूमेः शिरसि तृणबिन्दुसरः समीपे काम्यकं वनं जिगमिषामास | ७५७ | १ |
| मृगस्वप्नोद्भवपर्व्वसमाप्तिः ··· ··· | ७५७ | ६ |
| अथ व्रीहिद्रौणिकपर्व्वारम्भः ·· ··· | ७५७ | ७ |
| काम्यकवने दुःखिनं युधिष्ठिरं द्रष्टुं व्यासागमनं | ७५७ | ८ |
| प्रणिपातादिभिः प्रीणितो दुःखिनः पौत्रान् पाण्डवान् दृष्ट्वा विमना वक्तुमुपचक्रमे | ७५७ | १५ |
| नराणां सुखदुःखादि न चिरस्थायि इति तपसो माहात्म्यञ्चाहस्म व्यासः समादेश | ७५७ | १९ |
| तपोदानयोः किं महदिति युधिष्ठिरप्रश्नः | ७५८ | ५ |
| दानाद्धि दुष्करं भुवीत्यादि व्यासोक्तिः | ७५८ | ६ |
| मुद्गलो व्रीहिद्रोणं दत्त्वा महत्फलमापेति च | ७५८ | १४ |
| मुद्गलचरितशुश्रूषायां युधिष्ठिरप्रश्नः ··· | ७५८ | १५ |

| प्रकरणं | पृष्ठे | पंक्तौ |
|---|---|---|
| युधिष्ठिरं प्रति व्यासस्य मुद्गलचरितकथनं | ७५८ | १७ |
| व्रीहिद्रौणिकपर्व्वसमाप्तिर्व्यासगमनञ्च ... | ७६१ | १२ |
| अथ द्रौपदीहरणपर्व्वारम्भः ... ... | ७६१ | १४ |
| वैशम्पायनं प्रति जनमेजयप्रश्नः ... ... | ७६१ | १५ |
| पाण्डवानां कथं पापं भवेदिति चिन्तयन् सामात्यो दुर्य्योधनो दुर्व्वाससमातिथ्येन न्यमन्त्रयदित्यादि वैशम्पायनोक्तिः ... | ६६१ | १९ |
| क्रोधिनमागतं दुर्व्वाससं सदा छिद्रान्वेषिणं दासवद्दुर्य्योधनस्तं पूजयामास ... | ७६१ | २४ |
| शुश्रूषया तुष्टस्य दुर्व्वाससो वरदोऽस्मीत्युक्तिः | ७६२ | १ |
| द्रौपदीभोजनान्ते सशिष्य आतिथ्येन युधिष्ठिरं प्राप्नुहीति दुर्य्योधन प्रार्थना ... ... | ७६२ | ५ |
| दुर्य्योधनकर्णादीनां हर्षोक्तिः ... ... | ७६२ | १० |
| द्रौपदीभोजनान्ते दुर्व्वाससः आतिथ्यप्रार्थना | ७६२ | १६ |
| युधिष्ठिरो दुर्व्वाससं सायुतशिष्यमभिवाद्य स्नात्वागच्छेत्याह ... ... ... | ७६२ | १७ |
| द्रौपदीकृतश्रीकृष्णस्तवः ... ... | ७६२ | २१ |
| भक्तानुकम्पी कृष्णो द्रौपदीमित्यन्नं ययाचे | ७६३ | २ |
| सूर्य्यदत्तायां स्थाल्यां भुक्तभोजनोत्तरमन्नं नास्ति किं देयमिति द्रौपद्याह कृष्णं | ७६३ | ६ |
| कृष्णो द्रौपदीमाह स्थालीं दर्शयेति ... | ७६३ | ८ |
| विश्वात्मा कृष्णः स्थालीकण्ठलग्नशाकान्नं भुक्त्वा तृप्तो भीममाह सशिष्यदुर्व्वाससमाकारयेति | ७६३ | ९ |
| आकारयितुं गतो भीमो मुनीन् स्नातान् भुक्तवत इवापश्यत् ... ... | ७६३ | १२ |
| तृप्ताः सर्व्वे शिष्या दुर्व्वाससमेत्योचुर्व्वयमाकण्ठ तृप्ताः किं भुञ्जाम इत्यादि | ७६३ | १४ |
| पाण्डवा वैष्णवाः कृतात्मा अस्मानधाक्षुरिति शिष्यानुक्त्वाम्बरीषं सस्मार मुनिः ... | ७६३ | १७ |
| दुर्व्वासाः शिष्याश्च भीताः पलायाञ्चक्रुरित्याह स्म वैशम्पायनः ... ... ... | ७६३ | २१ |
| भीमो गत्वा युधिष्ठिरं सर्व्वं न्यवेदयत | ७६३ | २२ |
| छलपरो दुर्व्वासा क्रोधी किं करिष्यतीति विषीदतः पाण्डवान् कृष्णः पूर्व्ववृत्तमुक्त्वा सान्त्वयामास ... ... ... | ७६३ | २२ |
| द्रौपदीसहिताः पाण्डवाः कृष्णकृतं कर्म्म ज्ञात्वा तं तुष्टुवुः ... ... ... | ७६३ | ३० |
| दुरात्मभिर्धार्त्तराष्ट्रैर्वने एवं प्रयुक्तानि व्यजने कृत्यानि वृथाऽभवन्नित्यादि वैशम्पायनोक्तिः | ७६४ | ५ |
| रम्ये काम्यकवने विचरन्तः पाण्डवा एकदा द्रौपदीं गृहे स्थापयित्वा मृगयायां गताः | ७६४ | ७ |
| जयद्रथो वने द्रौपदीं दृष्ट्वा कोटिकास्यं राजानमाहेयं का इत्यादि ... .. | ७६४ | १२ |
| कोटिकास्य एत्य द्रौपदीं पप्रच्छ त्वं केत्यादि | ७६४ | २५ |
| कोटिकास्यं प्रति द्रौपदीवाक्यं .. | ७६५ | ११ |
| द्रौपद्युक्तं कोटिकास्यो जयद्रथमाह स्म इत्यादि ... ... ... ... | ७६५ | २३ |
| जयद्रथो द्रौपदीसमीपमेत्य पाण्डवानां कुशलादि पप्रच्छ .. ... ... | ७६५ | ३० |
| द्रौपद्यपि जयद्रथस्य कुशलादि पप्रच्छ पाण्डवानां कुशलाद्याह स्मातिथ्यं ददौ च | ७६६ | २ |
| द्रौपदीं कामयमानस्य जयद्रथस्य तां प्रति विलोभनवचनं ... ... ... | ७६६ | ८ |
| जयद्रथं प्रति तस्या वैमत्यकथनं ... | ७६६ | १३ |
| द्रौपदीजयद्रथयोरुत्तरप्रत्युत्तरवचनं | ७६६ | १७ |
| जयद्रथेन द्रौपदीग्रहणं ... ... | ७६७ | १३ |
| जयद्रथं प्रति धौम्यवचनं ... ... | ७६७ | १८ |

| प्रकरणं | पृष्ठे | पंक्तौ |
|---|---|---|
| धौम्यस्य द्रौपद्यनुगमनं ... ... | ७६७ | २० |
| वैशम्पायनवाक्यं ... ... ... | ७६७ | २२ |
| भ्रातॄन् प्रति युधिष्ठिरवाक्यं ... ... | ७६७ | २४ |
| युधिष्ठिरादीनां आश्रमगमनं ... .... | ७६७ | २८ |
| भीमार्ज्जुनौ प्रति युधिष्ठिरवाक्यं ... | ७६७ | २८ |
| धात्रेयिकां प्रति इन्द्रसेनवाक्यं .. ... | ७६८ | २ |
| इन्द्रसेनं प्रति धात्रेयिकावाक्यं ... ... | ७६८ | १० |
| इन्द्रसेनं प्रति द्रौपदीहरणकथनं ... | ७६८ | ११ |
| धात्रेयिकां प्रति युधिष्ठिरवाक्यं ... | ७६८ | २१ |
| भीमादीनां जयद्रथस्य पश्चाद्गमनं .... | ७६८ | २३ |
| भीमादिभिर्धौम्यदर्शनं .. ... | ७६८ | २५ |
| जयद्रथसैन्यं प्रति भीमादीनां गमनं ... | ७६८ | ६ |
| भीमादीनां द्रौपदीसहितजयद्रथदर्शनं | ७६. | २७ |
| वैशम्पायनवाक्यं ... ... ... | ७६८ | ३० |
| द्रौपदीं प्रति जयद्रथवाक्यं ... ... | ७६९ | १ |
| जयद्रथं प्रति द्रौपदीवाक्यं ... ... | ७६९ | ४ |
| जयद्रथं प्रति युधिष्ठिरादीनां परिचयदानं | ७६९ | ८ |
| पार्थकृतशरवृष्टिः ... ... .... | ७६९ | २९ |
| वैशम्पायनवाक्यं ... ... ... | ७७० | १ |
| पार्थसैन्धवयोर्युद्धं ... ... ... | ७७० | २ |
| शिविसौवीरादीनां विषादः ... ... | ७७० | ३ |
| सैन्धवं प्रति भीमस्य गमनं ... ... | ७७० | ४ |
| सैन्धवभीमयोर्युद्धं ... ... ... | ७७० | ५ |
| भीमकृतसैन्यनाशः ... ... .... | ७७० | ६ |
| अर्ज्जुनकृतसैन्यनाशः ... ... ... | ७७० | ७ |
| युधिष्ठिरकृतसैन्यनाशः ... ... | ७७० | ८ |
| नकुलकृतसैन्यनाशः ... ... ... | ७७० | १० |
| सहदेवकृतसैन्यनाशः ... ... ... | ७७० | ११ |
| रथादवरोहतस्त्रिगर्त्तस्य युद्धं ... | ७७० | १२ |
| नकुलेन क्षेमङ्करमहामुखयोर्युद्धं ... | ७७० | १६ |
| कोटिकाख्येन भीमस्य युद्धं ... ... | ७७० | २४ |
| द्वादशसौवीरैः सहार्ज्जुनस्य युद्धं ... | ७७० | २७ |
| द्रौपदीं त्यक्त्वा जयद्रथस्य पलायनं ... | ७७१ | २ |
| द्रौपद्या नकुलरथारोहणं ... ... | ७७१ | ४ |
| सैन्धवान् नाशयन्तं भीमं प्रति अर्ज्जुनवाक्यं | ७७१ | ७ |
| युधिष्ठिरं प्रति भीमवाक्यत्वेन वैशम्पायनोक्तिः | ७७१ | ९ |
| भीमं प्रति युधिष्ठिरवाक्यं ... ... | ७७१ | १३ |
| भीमार्ज्जुनौ प्रति द्रौपदीवाक्यत्वेन वैशम्पायनोक्तिः ... ... ... ... | ७७१ | १४ |
| जयद्रथवधार्थं भीमार्ज्जुनयोर्गमनं द्रौपद्या सह युधिष्ठिरस्याश्रमागमनञ्च ... | ७७१ | १७ |
| पलायनपरं जयद्रथं प्रत्यर्ज्जुनवाक्यं ... | ७७१ | २७ |
| द्रौपदीहरणपर्व्वसमाप्तिः ... ... | ७७२ | २ |
| जयद्रथविमोक्षणपर्व्वारम्भः ... ... | ७७२ | ५ |
| भीमकर्तृकजयद्रथग्रहणं ... ... | ७७२ | ६ |
| जयद्रथं प्रति भीमकृतपादप्रहारादिः ... | ७७२ | ७ |
| अर्ज्जुनकृतभीमवारणं ... ... ... | ७७२ | १० |
| अर्ज्जुनं प्रति भीमवाक्यं ... ... | ७७२ | ११ |
| जयद्रथं प्रति भीमवाक्यं ... ... | ७७२ | १४ |
| बद्धस्य जयद्रथस्य भीमरथारोपणं ... | ७७२ | १७ |
| जयद्रथेन सह भीमार्ज्जुनयोराश्रमागमनं | ७७२ | १८ |
| जयद्रथमोचने युधिष्ठिराद्यनुमतिः .. | ७७२ | १९ |
| बन्धनान्मुक्तं जयद्रथं प्रति युधिष्ठिरवाक्यं | ७७२ | २४ |
| दुःखितस्य जयद्रथस्य तपश्चरणं ... | ७७२ | २९ |
| जयद्रथस्य पाण्डवविजयवरप्रार्थना ... | ७७३ | ३ |
| अर्ज्जुनं विना सर्व्वान् वारयिष्यतीति महादेववाक्यं ... ... ... | ७७३ | ४ |

| प्रकरणं | पृष्ठे | पंक्तौ |
|---|---|---|
| महादेवकृतार्ज्जुनप्रशंसादि ... | ७७३ | ५ |
| महादेवकृतश्रीकृष्णप्रभावादिवर्णनं | ७७३ | ७ |
| अर्ज्जुनस्य श्रीकृष्णमाहात्म्यकथनं | ७७४ | २१ |
| शिवस्यान्तर्धानं ... ... | ७७४ | २६ |
| जयद्रथविमोक्षणपर्व्वसमाप्तिः ... | ७७४ | २८ |
| अथ रामोपाख्यानपर्व्वारम्भः ... ... | ७७५ | |
| द्रौपदीहरणादूर्द्ध्वं पाण्डवाः किमकुर्व्वत इति जनमेजयप्रश्नः ... ... ... | ७७५ | २ |
| वैशम्पायनवाक्यं .. ... ... | ७७५ | ३ |
| मार्कण्डेयं प्रति युधिष्ठिरप्रश्नः ... | ७७५ | ५ |
| मार्कण्डेयकर्तृकरामोपाख्यानकथनं | ७७५ | १६ |
| युधिष्ठिरकृतरामरावणवृत्तान्तप्रश्नः | ७७५ | १८ |
| मार्कण्डेयकर्तृकरामादिजन्मकथनं | ७७५ | २२ |
| रावणजन्मवृत्तान्तकथनं ... | ७७५ | २६ |
| पुष्पोत्कटायां कुम्भकर्णरावणयोर्जन्म | ७७६ | ११ |
| मालिन्यां विभीषणजन्म राकायां खरशूर्पणखयोरपि ... ... ... | ७७६ | १२ |
| विभीषणादीनां चरित्रकथनं .. ... | ७७६ | १३ |
| रावणादीनां तपश्चरणं ... ... | ७७६ | १८ |
| रावणादीन् प्रति वरान् दित्सोर्ब्रह्मणो वाक्यं ... .. ... ... | ७७६ | २६ |
| रावणस्य गन्धर्व्वादिभ्यो अभयप्रार्थना | ७७६ | २८ |
| मनुष्यात् ते एतेभ्यो भयं न भवेदिति वरदानं ... ... ... ... | ७७६ | ३० |
| कुम्भकर्णस्य निद्रारूपवरप्राप्तिः ... | ७७७ | २ |
| विभीषणस्य वरप्राप्तिः ... ... ... | ७७७ | ४ |
| रावणं प्रति कुवेरशापः ... ... | ७७७ | ८ |
| ब्रह्मर्ष्यादीनां ब्रह्मणः समीपगमनं ... | ७७७ | १६ |
| ब्रह्माणं प्रत्यग्निवाक्यं ... ... ... | ७७७ | १७ |
| अग्निं प्रति ब्रह्मणो वाक्यं ... ... | ७७७ | १८ |
| वानरीषु सुतान् जनयितुं देवान् प्रति ब्रह्मणो वाक्यं ... .. ... ... | ७७७ | २१ |
| देवादीनां मन्थरावताराय मन्त्रणादि ... | ७७७ | २३ |
| रामादीनां वनवासे युधिष्ठिरप्रश्नः ... | ७७८ | ३ |
| युधिष्ठिरं प्रति मार्कण्डेयवाक्यं ... | ७७८ | ५ |
| रामराज्याभिषेकाय दशरथस्य मन्त्रणादि ... ... .. ... | ७७८ | |
| राजवचनं श्रुतवत्याः मन्थरायाः कैकेयीं प्रति कथनं ... .. ... | ७७८ | १८ |
| दशरथं प्रति कैकेयीवाक्यं ... ... | ७७८ | २३ |
| कैकेयीं प्रति दशरथवाक्यं ... ... | ७७८ | २४ |
| कैकेयीकृतरामवनवासप्रार्थना ... ... | ७७८ | २८ |
| रामस्य वनगमनं ... ... ... | ७७८ | ३० |
| सीतालक्ष्मणयो रामस्यानुगमनं ... | ७७९ | १ |
| भरतं प्रति कैकेयीवाक्यं ... ... | ७७९ | ४ |
| कैकेयीं प्रति भरतवाक्यं ... ... | ७७९ | ५ |
| रामानयनार्थं भरतस्य चित्रकूटगमनं ... | ७७९ | ८ |
| रामपादुके गृहीतवतो भरतस्य राज्यकरणं | ७७९ | ११ |
| रामस्य शरभङ्गाश्रमादिगमनं ... | ७७९ | १२ |
| रामकृतखरादिराक्षसवधः .... ... | ७७९ | १४ |
| शूर्पणखाया रावणसमीपगमनं ... | ७७९ | १७ |
| शूर्पणखां प्रति रावणवाक्यं ... ... | ७७९ | २० |
| मारीचरावणयोः संवादः ... ... | ७८० | २ |
| रावणमारीचयो रामाश्रमागमनादि ... | ७८० | १४ |
| रामस्य मारीचपश्चाद्गमनादि ... | ७८० | १७ |
| लक्ष्मणं प्रति सीतायाः परुषवाक्यं ... | ७८० | २६ |
| सीतां प्रति रावणस्यात्मपरिचयदानं ... | ७८१ | ४ |

| प्रकरणं | पृष्ठे | पंक्तौ |
|---|---|---|
| रावणं प्रति सीताया वाक्यं ... ... | ७८१ | ७ |
| रावणकृतसीताहरणं ... ... ... | ७८१ | ११ |
| रावणं प्रति जटायुषो वाक्यं ... ... | ७८१ | १७ |
| जटायुषः पक्षच्छेदः ... ... ... | ७८१ | २० |
| सीतया सह रावणस्य लङ्काप्रवेशः ... | ७८१ | २५ |
| लक्ष्मणं प्रति श्रीरामवाक्यं ... ... | ७८१ | २८ |
| रामस्य जटायुषो दर्शनादि ... ... | ७८२ | २ |
| लक्ष्मणस्य विलापादिः .... ... ... | ७८२ | १५ |
| रामकृतकबन्धवधः ... ... ... | ७८२ | २० |
| कबन्धदेहादुद्गतं पुरुषं प्रति रामवाक्यं ... | ७८२ | २४ |
| रामस्य तस्मात्सीताप्राप्त्युपायश्रवणं ... | ७८२ | २७ |
| विश्वावसोरन्तर्धानं ... ... ... | ७८३ | २ |
| रामलक्ष्मणयोः पम्पानदीगमनं ... | ७८३ | ४ |
| विलपन्तं रामं प्रति लक्ष्मणवाक्यं ... | ७८३ | ७ |
| रामलक्ष्मणयोर्ऋष्यमूकपर्व्वतगमनादि | ७८३ | १२ |
| सुग्रीवेण रामस्य सख्यादि ... .... | ७८३ | १४ |
| तारावालिनोरुक्तिप्रत्युक्ती ... ... | ७८३ | २० |
| सुग्रीवं प्रति वालिवाक्यं ... ... | ७८३ | ३० |
| वालिनं प्रति सुग्रीववाक्यं ... ... | ७८४ | २ |
| वालिसुग्रीवयोर्युद्धं .... ... ... | ७८४ | ३ |
| श्रीरामकृतवालिवधः ... ... ... | ७८४ | १० |
| रावणगृहे सीताया व्यवहारकथनं ... | ७८४ | १५ |
| राक्षसीः प्रति सीताया वाक्यं .... ... | ७८४ | २३ |
| सीतां प्रति त्रिजटायाः सान्त्वनावाक्यं ... | ७८४ | २८ |
| सीतायाः समीपे रावणस्य गमनादि ... | ७८५ | १८ |
| सीतां प्रति रावणवाक्यं ... ... | ७८५ | २५ |
| रावणेनोक्तायाः सीताया दुःखकथनं ... | ७८६ | ४ |
| रावणं प्रति सीताया वाक्यं ... ... | ७८६ | ७ |
| पुनः सीतां प्रति रावणवाक्यं ... ... | ७८६ | १४ |
| रामस्य माल्यवत्पर्व्वतवासादि ... | ७८६ | २० |
| लक्ष्मणं प्रति श्रीरामवाक्यं ... ... | ७८६ | २४ |
| रामवचनात् लक्ष्मणस्य सुग्रीवसमीपगमनं | ७८७ | १ |
| सुग्रीवं प्रति लक्ष्मणकर्तृकरामोक्तकथनं ... | ७८७ | ४ |
| लक्ष्मणं प्रति सुग्रीववाक्यं ... ... | ७८७ | ६ |
| सीतान्वेषणार्थं गतस्य हनूमत आगमनादि | ७८७ | १६ |
| हनूमन्तं प्रति श्रीरामवाक्यं ... ... | ७८७ | २३ |
| श्रीरामं प्रति हनूमतः सीतान्वेषणवृत्तान्तकथनं ... ... ... ... | ७८७ | २६ |
| हनूमत्कर्तृकसम्पातिवृत्तान्तकथनादि ... | ७८८ | ६ |
| सम्पातिमुखात् हनूमतो रावणवृत्तान्तश्रवणादि ... ... ... | ७८८ | १६ |
| सीतां प्रति हनूमद्वचनं ... ... | ७८८ | २२ |
| हनूमन्तं प्रति सीताया वाक्यं ... ... | ७८८ | २७ |
| रामं प्रति सीताकथितप्रत्ययजनकवाक्यकथनं | ७८९ | १ |
| श्रीरामसमीपे वानराणामागमने मार्कण्डेयवाक्यं ... ... ... ... | ७८९ | ४ |
| सुषेणादीनां वानराणां सैन्यसंख्यावर्णनं | ७८९ | ५ |
| वानराणां रूपवर्णनं ... ... ... | ७८९ | १३ |
| लङ्कागमनार्थं ससैन्यस्य रामस्य यात्रा ... | ७८९ | १७ |
| सर्व्वेषां समुद्रवेलायां निवासकरणं ... | ७८९ | २५ |
| समुद्रलंघनोपाये श्रीरामवाक्यं ... | ७८९ | २७ |
| समुद्ररामयोः संवादः ... ... | ७९० | ८ |
| समुद्रे सेतुकरणे नलं प्रति श्रीरामाज्ञा | ७९० | १६ |
| रामसमीपे विभीषणागमनं ... ... | ७९० | १९ |
| रामस्य रावणसमीपे अङ्गदप्रेषणं ... | ७९० | २७ |
| रावणस्य सैन्योद्योगादि ... ... | ७९० | ३० |
| अङ्गदस्य रावणसमीपगमनादि ... .... | ७९१ | ५ |
| रावणं प्रति अङ्गदवाक्यं ... ... | ७९१ | ९ |

| प्रकरणं | पृष्ठे | पंक्तौ | प्रकरणं | पृष्ठे | पंक्तौ |
|---|---|---|---|---|---|
| अङ्गदप्रत्यागमनादि .... .... ... | ७८१ | १७ | मायानाशने रामं प्रति लक्ष्मणवाक्यं .... | ७८७ | १० |
| लङ्कायाः प्राकारभङ्गादि ... ... | ७८१ | २१ | श्रीरामं प्रति मातलिवाक्यं ... ... | ७८७ | १२ |
| राक्षसवानराणां युद्धं ... ... .. | ७८२ | १ | रामं प्रति विभीषणवाक्यं ... ... | ७८७ | १५ |
| युद्धार्थं रावणस्यागमनं ... ... | ७८२ | १५ | रामरावणयोर्महायुद्धं ... ... | ७८७ | १७ |
| रावणादिभिः सह रामादीनां युद्धं ... | ७८२ | १८ | रामकृतरावणवधः ... ... ... | ७८७ | २८ |
| रामरावणयोर्युद्धवर्णनं ... ... | ७८२ | २१ | मार्कण्डेयवाक्यं ... ... ... | ७८८ | ४ |
| प्रहस्तविभीषणयोर्युद्धं ... ... | ७८२ | २७ | देवादीनां हर्षेण रामपूजनं ... ... | ७८८ | ६ |
| राक्षसैः सह हनूमत्प्रभृतीनां युद्धं ... | ७८३ | ३ | विभीषणाय राज्यदानं ... ... | ७८८ | ८ |
| हनूमत् धुम्राक्षयोर्युद्धं ... ... | ७८३ | ७ | रामस्य सीतादर्शनं ... ... ... | ७८८ | ११ |
| हनूमत्कृतधुम्राक्षवधः ... ... ... | ७८३ | १० | सीतां प्रति रामस्य प्रत्याख्यानवचनं ... | ७८८ | १३ |
| कुम्भकर्णस्य निद्राभङ्गाय रावणाज्ञा ... | ७८३ | १५ | रामवचः श्रुतवत्याः सीतायाः पतनं ... | ७८८ | १७ |
| कुम्भकर्णं प्रति रावणवाक्यं ... ... | ७८३ | १८ | वानराणां विषादः ... ... ... | ७८८ | १८ |
| कुम्भकर्णस्य महायुद्धकथनं ... ... | ७८३ | २८ | रामसमीपे ब्रह्मादीनामागमनं ... | ७८८ | २० |
| लक्ष्मणेन सह कुम्भकर्णस्य युद्धं ... ... | ७८४ | ८ | दशरथादीनामागमनं ... ... | ७८८ | २२ |
| लक्ष्मणकृतकुम्भकर्णवधः ... ... | ७८४ | १६ | श्रीरामं प्रति सीतावाक्यं ... ... | ७८८ | २५ |
| दूषणानुजाभ्यां लक्ष्मणस्य युद्धं ... | ७८४ | १८ | रामं प्रति वायुवाक्यं ... ... ... | ७८८ | ३० |
| युधिष्ठिरं प्रति मार्कण्डेयवाक्यं ... | ७८४ | २८ | रामं प्रत्यग्निवाक्यं ... ... ... | ७८९ | १ |
| इन्द्रजितं प्रति रावणवाक्यं ... ... | ७८४ | २८ | रामं प्रति वरुणवाक्यं ... ... ... | ७८९ | २ |
| इन्द्रजिल्लक्ष्मणयोर्युद्धं ... ... ... | ७८५ | ६ | रामं प्रति ब्रह्मणो वाक्यं ... ... | ७८९ | ३ |
| माययाऽन्तर्हितस्येन्द्रजितो युद्धं ... .. | ७८५ | १७ | रामं प्रति दशरथवाक्यं ... ... | ७८९ | ८ |
| मार्कण्डेयवाक्यं ... ... ... | ७८५ | २६ | दशरथं प्रति रामवाक्यं ... ... | ७८९ | १० |
| श्रीरामं प्रति विभीषणवाक्यं ... .... | ७८६ | ४ | मार्कण्डेयवाक्यं ... ... ... | ७८९ | ११ |
| इन्द्रजिल्लक्ष्मणयोर्युद्धवर्णनं ... ... | ७८६ | १३ | रामं प्रति ब्रह्मादीनां वरदानं ... | ७८९ | १४ |
| लक्ष्मणकृतेन्द्रजिद्वधः ... ... | ७८६ | १६ | हनूमन्तं प्रति सीताया वरदानं ... | ७८९ | १७ |
| सीताहननार्थं रावणस्य गमनं ... | ७८६ | २१ | शक्रादीनामन्तर्धानं .... ... ... | ७८९ | २० |
| अविन्ध्यकृतरावणक्रोधशान्तिः ... | ७८६ | २३ | रामं प्रति शक्रसारथिवाक्यं ... ... | ७८९ | २१ |
| रावणं प्रति अविन्ध्यवाक्यं ... ... | ७८६ | २४ | ससैन्यस्य रामस्य लक्ष्मणादिभिः सहागमनं | ७८९ | २४ |
| युद्धार्थं रावणस्य निर्गमनं ... ... | ७८६ | ३० | रामस्य पुनः किष्किन्ध्यागमनं ... ... | ७८९ | २८ |
| रावणकृतमायासृष्टिः ... ... ... | ७८७ | ४ | रामादीनां अयोध्यां प्रत्यागमनं ... | ८०० | २ |

| प्रकरणं | पृष्ठे | पंक्तौ |
|---|---|---|
| भरतं प्रति हनूमत्प्रेषणं | ८०० | |
| रामस्य राज्याभिषेकः | ८०० | ७ |
| गृहगमनाय विभीषणादीन् प्रत्यनुज्ञा | ८०० | |
| रामस्य दशाश्वमेधयज्ञकरणं | ८०० | १२ |
| युधिष्ठिरं प्रति मार्कण्डेयस्याश्वासवाक्यं | ८०० | १५ |
| वैशम्पायनवाक्यं | ८०० | २८ |
| रामोपाख्यानपर्व्वसमाप्तिः | ८०० | |
| पतिव्रतामाहात्म्यपर्व्वारम्भः | ८०१ | |
| पतिव्रताविषये युधिष्ठिरप्रश्नः | ८०१ | |
| युधिष्ठिरं प्रति मार्कण्डेयवाक्यं | ८०१ | |
| अश्वपतिराजस्य वृत्तान्तकथनं | ८०१ | |
| सावित्र्यश्वपतिसंवादः | ८०१ | १२ |
| अश्वपतेः सावित्रीनामककन्यालाभादि | ८०१ | २३ |
| सावित्रीं प्रति स्वयम्वरार्थं अश्वपतिवाक्यं | ८०२ | |
| सावित्र्यास्तपोवनागमनं | ८०२ | १० |
| सावित्र्याः प्रत्यागमनं | ८०२ | १६ |
| अश्वपतिं प्रति नारदवाक्यं | ८०२ | १८ |
| नारदं प्रत्यश्वपतिवाक्यं | ८०२ | १९ |
| स्वयम्वरविषये पितरं प्रति सावित्रीवाक्यं | ८०२ | २१ |
| नारदाश्वपत्योः संवादः | ८०२ | २५ |
| पितरं प्रति सावित्रीवाक्यं | ८०३ | |
| नारदाश्वपत्योः संवादः | ८०३ | १३ |
| सावित्र्या विवाहोद्योगः | ८०३ | १९ |
| कन्यया सहाश्वपतेर्द्युमत्सेनाश्रमगमनं | ८०३ | २१ |
| अश्वपतिद्युमत्सेनयोः संवादः | ८०३ | २६ |
| सत्यवता सह सावित्रीविवाहः | ८०४ | |
| भर्त्तृगृहे सावित्र्या व्यवहारकथनं | ८०४ | |
| सावित्र्यास्त्रिरात्रव्रतकरणं | ८०४ | १७ |

| प्रकरणं | पृष्ठे | पंक्तौ |
|---|---|---|
| सावित्रीं प्रति द्युमत्सेनवाक्यं | ८०४ | १९ |
| द्युमत्सेनं प्रति सावित्रीवाक्यं | ८०४ | २० |
| पुनर्द्युमत्सेनवाक्यं | ८०४ | २१ |
| युधिष्ठिरं प्रति मार्कण्डेयवाक्यं | ८०४ | २२ |
| सावित्रीं प्रति श्वश्रूश्वशुरयोर्वाक्यं | ८०४ | ३० |
| सावित्रीसत्यवतोः संवादः | ८०५ | ३ |
| भर्त्रा सह वनगमनार्थं सावित्र्याः प्रार्थना | ८०५ | ७ |
| द्युमत्सेनस्य सावित्रीं प्रत्यनुज्ञा | ८०५ | ११ |
| सावित्रीवनदर्शनं | ८०५ | १४ |
| सावित्रीं प्रति पीडितसत्यवतो वाक्यं | ८०५ | २१ |
| सावित्र्याङ्के सत्यवतः शयनं | ८०५ | २४ |
| सावित्र्या यमदर्शनं | ८०५ | २६ |
| सावित्रीयमयोः संवादः | ८०५ | २८ |
| सत्यवन्तं गृहीत्वा यमस्य गमनं | ८०६ | ५ |
| सावित्र्या यमस्य पश्चाद्गमनं | ८०६ | ७ |
| पतिव्रताधर्म्मे यमसावित्र्योः संवादः | ८०६ | ८ |
| सावित्र्यै यमस्य वरदानोत्साहः | ८०७ | २८ |
| पतिर्मे जीवतु इति सावित्रीप्रार्थना | ८०९ | १ |
| सावित्रीं प्रति यमस्य वरदानं | ८०८ | ७ |
| सत्यवतो जीवनलाभः | | १५ |
| सत्यवत्सावित्र्योरुक्तिप्रत्युक्ती | ८०८ | १६ |
| आत्ममरणवृत्तान्ते सत्यवतो जिज्ञासा | | २० |
| श्वस्ते वक्तव्यमित्यादि सावित्र्या वाक्यं | | २४ |
| सत्यवत्सावित्र्योरुक्तिप्रत्युक्ती | ८०८ | २९ |
| पित्रोरदर्शने सत्यवतः खेदः | ८०९ | ४ |
| सावित्र्याः श्वशुरयोर्जीवनप्रार्थना | ८०९ | १९ |
| सावित्रीं प्रति सत्यवतो वाक्यं | ८०९ | २१ |
| तयोराश्रमं प्रत्यागमनं | ८०९ | २४ |
| द्युमत्सेनस्य भार्यया सह पुत्रान्वेषणं | ८१० | ४ |

| प्रकरणं | पृष्ठं | पंक्तौ |
|---|---|---|
| तौ प्रति सुवर्च्चसो वाक्यं ... ... | ८१० | १३ |
| तौ प्रति गौतमस्य वाक्यं ... ... | ८१० | १४ |
| तौ प्रति शिष्यस्य वाक्यं ... ... | ८१० | १७ |
| तौ प्रति ऋषीणां वाक्यं ... ... | ८१० | १८ |
| तौ प्रति भरद्वाजस्य वाक्यं ... ... | ८१० | १९ |
| तौ प्रति दाल्भ्यस्य वाक्यं ... ... | ८१० | |
| तौ प्रति धौम्यस्य वाक्यं ... | ८१० | २२ |
| साविच्या सह सत्यवतो आश्रमप्रवेशः | ८१० | २४ |
| सत्यवन्तं दृष्टवतां ब्राह्मणानां वाक्यं | ८१० | २५ |
| सत्यवन्तं प्रति ऋषीणां जिज्ञासा | ८११ | |
| ऋषीन् प्रति सत्यवतो वाक्यं ... | ८११ | |
| सावित्रीं प्रति गौतमस्य जिज्ञासा | ८११ | |
| सावित्रीकर्तृकसर्व्ववृत्तान्तकथनं | ८११ | |
| ऋषीणां सावित्रीप्रशंसादि ... | ८११ | |
| युधिष्ठिरं प्रति मार्कण्डेयवाक्यं ... | ८११ | २२ |
| द्युमत्सेनस्य राज्यप्राप्तिः ... | ८१२ | २ |
| वैशम्पायनवाक्यं ... ... | ८१२ | ७ |
| पतिव्रतामाहात्म्यपर्व्वसमाप्तिः ... | ८१२ | ९ |
| | | |
| [illegible]पर्व्वारम्भः | ८१२ | ११ |
| जनमेजयप्रश्नः | ८१२ | १२ |
| वैशम्पायनवाक्यं ... ... | ८१२ | १५ |
| पाण्डवहितार्थं शक्रस्य कुण्डलभिक्षार्थमुद्यो[गः] | ८१२ | १६ |
| कुण्डलदाननिषेधार्थं कर्णं प्रति ब्राह्मण[रूपि] सूर्य्यवाक्यं ... ... ... | ८१२ | २१ |
| कर्णस्य ब्राह्मणरूपिसूर्य्यपरिचयजिज्ञासा | ८१३ | ३ |
| कर्णसमीपे सूर्य्यस्य परिचयदानादि ... | ८१३ | ४ |
| कर्णसूर्य्ययोः संवादः ... ... ... | ८१३ | ५ |
| कर्णकृतकीर्त्तिप्रशंसादि ... ... | ८१३ | १३ |

| प्रकरणं | पृष्ठं | पंक्तौ |
|---|---|---|
| शरीराविरोधेन कीर्त्तिः प्रशंसनीयेत्यादि सूर्य्योक्तिः ... ... ... | ८१३ | २४ |
| कर्णसूर्य्ययोः संवादः ... ... ... | ८१४ | ३ |
| कर्णं प्रति सूर्य्यस्य शक्तिविनिमयेन कुण्डलदानाभ्यनुज्ञा ... ... ... | ८१४ | २६ |
| वैशम्पायनवाक्यं ... ... ... | ८१४ | ३० |
| किन्तद्गुह्यमित्यादि जनमेजयप्रश्नः .. | ८१५ | ५ |
| वैशम्पायनवाक्यं ... ... .. | ८१५ | ७ |
| कुन्तिभोजसमीपे ब्राह्मणस्य गमनं ... | ८१५ | ८ |
| कुन्तिभोजं प्रति ब्राह्मणवाक्यं ... .. | ८१५ | १० |
| ब्राह्मणं प्रति कुन्तिभोजवाक्यं ... ... | ८१५ | १३ |
| ब्राह्मणस्य सेवार्थं पृथां प्रति कुन्तिभोजस्य वाक्यं | ८१५ | १७ |
| [illegible]कृतपृथाप्रशंसा ... ... | ८१५ | २३ |
| पितरं प्रति पृथावाक्यं ... | ८१६ | ५ |
| कुन्तिभोजवाक्यं ... ... | ८१६ | १६ |
| ब्राह्मणं प्रति कुन्तिभोजवाक्यं ... | ८१६ | १८ |
| पृथाया ब्राह्मणाराधनं .... | ८१६ | २४ |
| पृथाया ब्राह्मणाराधने वैशम्पायनवाक्यं | ८१६ | २६ |
| वरदानार्थं कुन्तीं प्रति ब्राह्मणवाक्यं | ८१७ | ७ |
| ब्राह्मणं प्रति कुन्तीवाक्यं ... | ८१७ | १० |
| पृथाया देवाकर्षणमन्त्रप्राप्तिः ... | ८१७ | ११ |
| कुन्तिभोजं प्रति ब्राह्मणवाक्यं ... | ८१७ | १६ |
| ब्राह्मणेऽन्तर्हिते राज्ञो विस्मयः.... | ८१७ | १८ |
| ब्राह्मणे गते पृथायाश्चिन्ता ... | ८१७ | २० |
| मन्त्रेण कुन्तीकर्तृकसूर्य्याकर्षणं | ८१७ | २६ |
| कुन्तीं प्रति सूर्य्यवाक्यं ... ... | ८१७ | ३० |
| कुन्तीसूर्य्ययोः संवादः ... | ८१८ | १ |
| कुन्त्या दिव्यचक्षुःप्राप्त्या देवादिदर्शनं | ८१८ | ११ |

| प्रकरणं | पृष्ठं | पंक्तौ |
|---|---|---|
| सूर्य्यस्य कुन्त्यनुनयः ... .. ... | ८१८ | १६ |
| वैशम्पायनस्य कुन्तीवृत्तान्तकथनं ... | ८१८ | २२ |
| कुन्तीसूर्य्ययोः संवादः ... ... | ८१८ | २९ |
| कुन्त्याः सूर्य्यसङ्गमे अनुमतिः ... | ८१९ | ११ |
| कुन्तीसूर्य्ययोः सङ्गमः .... .. | ८८१ | १४ |
| [illegible]त्पत्तिकथनं ... .. ... | ८१९ | २१ |
| नद्यां मञ्जूषया प्रक्षिप्तं कर्णं प्रति कुन्त्या आशीर्व्वादः ... ... ... | ८१९ | ३० |
| सूतभार्य्यायाः राधायाः मञ्जूषादर्शनं ... | ८२० | २१ |
| कर्णं दृष्टवतः सूतस्य राधां प्रति वाक्यं | ८२० | २७ |
| कर्णस्य वसुषेण इतिनामकरणं ... ... | ८२१ | १ |
| द्रोणादिभ्यः कर्णस्यास्त्रशिक्षादि ... | ८२१ | ६ |
| कर्णसमीपे ब्राह्मणवेशेन शक्रस्यागमनं ... | ८२१ | १३ |
| कर्णशक्रयोः संवादः ... ... ... | ८२१ | १६ |
| शक्रात् कर्णस्य एकघातिनीशक्तिप्राप्तिः ... | ८२२ | १९ |
| कर्णस्य शक्राय कुण्डलकवचयोर्दानं .. | ८२२ | २२ |
| तानि गृहीत्वा शक्रस्यागमनं ... ... | ८२२ | २३ |
| कर्णं दृष्ट्वा दुर्य्योधनादीनाम् तापः ... | ८२२ | २४ |
| द्वादशाब्दे अतीते पाण्डवाः किमकार्षु रिति जनमेजयप्रश्नः ... ... ... | ८२२ | २५ |
| युधिष्ठिरादीनां द्वैतवनागमनं ... ... | ८२२ | २७ |
| कुण्डलाहरणपर्व्वसमाप्तिः ... ... | ८२२ | |
| आरणेयपर्व्वारम्भः ... ... | ८२३ | |
| जनमेजयप्रश्नः ... ... | ८२३ | |
| वैशम्पायनस्योत्तरं ... ... | ८२३ | |
| पाण्डवानां पुनर्द्वैतवने वासः ... | ८२३ | ४ |
| युधिष्ठिरं प्रति ब्राह्मणवाक्यं ... | ८२३ | १२ |
| पाण्डवानां मृगान्वेषणं ... | ८२३ | १६ |
| युधिष्ठिरादीन् प्रति नकुलप्रश्नः | ८२३ | २१ |
| युधिष्ठिरादीनां क्रमेणोत्तरदानं .. | ८२३ | २४ |
| जलानयनार्थं नकुलस्य गमनं ... . | ८२४ | ४ |
| जलानयने यक्षः [illegible]कनिवारणं ... . | ८२४ | ६ |
| जलपानेन न[illegible] [illegible]स्य पतनं .... .. | ८२४ | ७ |
| ततः सहदेवा[illegible] नां क्रमेण गमनं पतनञ्च | ८२४ | १० |
| युधिष्ठिर[illegible] स्य गमनं ... ... | ८२५ | ८ |
| युधि[illegible] निपतित भ्रातृ दर्शनं | ८२५ | १२ |
| भ्रा[illegible] न् दृष्ट्वा युधिष्ठिरस्य चिन्ता . ... ... ... | ८२५ | १५ |
| [illegible] भीमादिपतनकारणचिन्ता | ८२५ | २८ |
| [illegible]योः संवादः .... ... | ८२६ | ९ |
| [illegible]योः प्रश्नोत्तरौ ... ... | ८२६ | २६ |
| सर्व्वेषां भी[illegible]दीनां उत्थानाय यक्षवाक्यं | ८२९ | २५ |
| भीमादीनां जीवनप्राप्तिः .... ... | ८२९ | २७ |
| को भवानित्यादियक्षं प्रति युधिष्ठिरजिज्ञासा | ८२९ | २८ |
| धर्म्मोऽह[illegible] यक्षस्य परिचयदानं ... | ८३० | २ |
| वरं [illegible] यक्षवाक्यं | ८३० | ७ |
| युधिष्ठिरस्य वरप्रार्थनादि | ८३० | ८ |
| धर्म्मस्यान्तर्धा | ८३० | २२ |
| पाण्डवानां [illegible] वासकथनं | ८३० | २७ |
| तपस्विनः [illegible] ण्डवानां वार्त | ८३० | २९ |
| युधिष्ठिरं प्रति [illegible] वाक्यं | ८३१ | ७ |
| युधिष्ठिरं प्रति [illegible] वाक्यं | ८३१ | २० |
| द्वैतवनात् सर्व्वेषां गमनं . | ८३१ | २५ |
| पाण्डवानामज्ञातवास[illegible] | ८३१ | २७ |
| आरणेयपर्व्वसमाप्तिः | ८३१ | २८ |
| वनपर्व्वसमाप्तिः | ८३१ | २९ |

# श्रीमहाभारतं

## ॥ वनपर्व्व ॥

॥ नारायणं नमस्कृत्य नरञ्चैव नरोत्तमं। देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥

॥ जनमेजय उवाच ॥ एवं द्यूतजिताः पार्थाः कोपिताश्च दुरात्मभिः। धार्त्तराष्ट्रैः सहामात्यैर्निकृत्या द्विजसत्तम।
श्राविताः परुषा वाचः सृजद्भिर्वैरमुत्तमं। किमकुर्व्वत कौरव्या मम पूर्व्वपितामहाः।
कथञ्चैश्वर्य्यविभ्रष्टाः सहसा दुःखमेयुषः। वने विजह्रिरे पार्थाः शक्रप्रतिमतेजसः।
के वै तानन्ववर्त्तन्त प्राप्तान् व्यसनमुत्तमं। किमाचाराः किमाहाराः क्व च वासो महात्मनां।
कथञ्च द्वादश समा वने तेषां महामुने। व्यतीयुर्ब्राह्मणश्रेष्ठ शूराणामरिघातिनां।
कथञ्च राजपुत्री सा प्रवरा सर्व्वयोषितां। पतिव्रता महाभागा सततं सत्यवादिनी।
वनवासमदुःखार्हा दारुणं प्रत्यपद्यत। एतदाचक्ष्व मे सर्व्वं विस्तरेण तपोधन।
श्रोतुमिच्छामि चरितं भूरिद्रविणतेजसां। कथ्यमानं त्वया विप्र परं कौतूहलं हि मे।

॥ वैशम्पायन उवाच ॥ एवं द्यूतजिताः पार्थाः कोपिताश्च दुरात्मभिः। धार्त्तराष्ट्रैः सहामात्यैर्निर्ययुर्गजसाह्वयात्।
वर्द्धमानपुरद्वारादभिनिष्क्रम्य पाण्डवाः। उदङ्मुखाः शस्त्रभृतः प्रययुः सह कृष्णया।
इन्द्रसेनादयश्चैव भृत्याः परि चतुर्द्दश। रथैरनुययुः शीघ्रैः स्त्रिय आदाय सर्व्वशः।
गतानेतान् विदित्वा तु पौराः शोकाभिपीडिताः। गर्हयन्तोऽसकृद्भीष्मविदुरद्रोणगौतमान्।
ऊचुर्व्विगतसन्त्रासाः समागम्य परस्परं। पौरा ऊचुः। नेदमस्ति कुलं सर्व्वं न वयं नच नो गृहाः।
यत्र दुर्य्योधनः पापः सौबलेयेन पालितः। कर्णदुःशासनाभ्याञ्च राज्यमेतच्चिकीर्षति।
न तत् कुलं नचाचारो न धर्म्मोऽर्थः कुतः सुखं। यत्र पापसहायोऽयं पापो राज्यञ्चिकीर्षति।
दुर्य्योधनो गुरुद्वेषी त्यक्ताचारसुहृज्जनः। अर्थलुब्धोऽभिमानी च नीचः प्रकृतिनिर्घृणः।
नेयमस्ति मही कृत्स्ना यत्र दुर्य्योधनो नृपः। साधु गच्छामहे सर्व्वे यत्र गच्छन्ति पाण्डवाः।

सानुक्रोशा महात्मानो विजितेन्द्रियशत्रवः । ह्रीमन्तः कीर्त्तिमन्तश्च धर्म्माचारपरायणाः ।
॥ वैशम्पायन उवाच ॥ एवमुक्त्वा ऽनुजग्मुस्ते पाण्डवांस्तान् समेत्य च । ऊचुः प्राञ्जलयः सर्व्वे कौन्तेयान्माद्रिनन्दनान् ।
क्व गमिष्यथ भद्रं वस्त्यक्त्वाऽस्मान् दुःखभागिनः । वयमप्यनुयास्यामो यत्र यूयं गमिष्यथ ।
अधर्म्मेण जितान् श्रुत्वा युष्मांस्त्यक्तघृणैः परैः । उद्विग्नाः स्मो भृशं सर्व्वे नास्मान् हातुमिहार्हथ ।
भक्तानुरक्तान् सुहृदः सदा प्रियहिते रतान् । कुराजाधिष्ठिते राज्ये न विनश्येम सर्व्वशः ।
श्रूयन्तां चाभिधास्यामो गुणदोषान्नरर्षभाः । शुभाशुभाधिवासेन संसर्गः कुरुते यथा ।
वस्त्रमापस्तिलान् भूमिं गन्धो वासयते यथा । पुष्पाणामधिवासेन तथा संसर्गजा गुणाः ।
मोहजालस्य योनिर्हि मूढैरेव समागमः । अहन्यहनि धर्म्मस्य योनिः साधुसमागमः ।
तस्मात् प्राज्ञैश्च वृद्धैश्च सुस्वभावैस्तपस्विभिः । सद्भिश्च सह संसर्गः कार्य्यः शमपरायणैः ।
येषां त्रीण्यवदातानि विद्या योनिश्च कर्म्म च । तान् सेवेत्तैः समास्या हि शास्त्रेभ्यो हि गरीयसी ।
निरारम्भा ह्यपि वयं पुण्यशीलेषु साधुषु । पुण्यमेवाप्नुयामेह पापं पापोपसेवनात् ।
असतां दर्शनात् स्पर्शात् संजल्पाच्च सहासनात् । धर्म्माचाराः प्रहीयन्ते सिद्ध्यन्ति च न मानवाः ।
बुद्धिश्च हीयते पुंसां नीचैः सह समागमात् । मध्यमैर्म्मध्यतां याति श्रेष्ठतां याति चोत्तमैः ।
अनीचान्यविषयैर्न्नाधर्म्मिष्ठैर्व्विशेषतः । ये गुणाः कीर्त्तिता लोके धर्म्मकामार्थसम्भवाः । लोकाचारेषु सम्भूता वेदोक्ताः शिष्टसम्मताः ।
ते युष्मासु समस्ताश्च व्यस्ताश्चैवेह सद्गुणाः । इच्छामो गुणवन्मध्ये वस्तुं श्रेयोऽभिकाङ्क्षिणः ।
॥ युधिष्ठिर उवाच ॥ धन्या वयं यदस्माकं स्नेहकारुण्ययन्त्रिताः । असतोऽपि गुणानाहुर्ब्राह्मणप्रमुखाः प्रजाः ।
तदहं भ्रातृसहितः सर्व्वान् विज्ञापयामि वः । नान्यथा तद्धि कर्त्तव्यमस्मत्स्नेहानुकम्पया ।
भीष्मः पितामहो राजा विदुरो जननी च मे । सुहृज्जनश्च प्रायो मे नगरे नागसाह्वये ।
ते त्वस्मद्धितकामार्थं पालनीयाः प्रयत्नतः । युष्माभिः सहिताः सर्व्वे शोकसन्तापविह्वलाः ।
निवर्त्ततागता दूरं समागमनशापिताः । स्वजने न्यासभूते मे कार्य्या स्नेहान्विता मतिः ।
एतद्धि मम कार्य्याणां परमं हृदि संस्थितं । कृता तेन तु तुष्टिर्म्मे सत्कारश्च भविष्यति ।
॥ वैशम्पायन उवाच ॥ तथाऽनुमन्त्रितास्तेन धर्म्मराजेन ताः प्रजाः । चक्रुरार्त्तस्वरं घोरं हा राजन्निति संहताः ।
गुणान् पार्थस्य संस्मृत्य दुःखार्त्ताः परमातुराः । अकामाः संन्यवर्त्तन्त समागम्याथ पाण्डवान् ।
निवृत्तेषु तु पौरेषु रथानास्थाय पाण्डवाः । आजग्मुर्जाह्नवीतीरे प्रमाणाख्यं महावटं ।
ते तं दिवसशेषेण वटं गत्वा तु पाण्डवाः । ऊषुस्तां रजनीं वीराः संस्पृश्य सलिलं शुचि ।
उदकेनैव तां रात्रिमूषुस्ते दुःखकर्षिताः । अनुजग्मुश्च तत्रैतान् स्नेहात् केचिद्द्विजातयः ।
साग्नयोऽनग्नयश्चैव सशिष्यगणबान्धवाः । स तैः परिवृतो राजा शुशुभे ब्रह्मवादिभिः ।
तेषां प्रादुष्कृताग्नीनां मुहूर्त्ते रम्यदारुणे । ब्रह्मघोषपुरस्कारः संजल्पः समजायत ।
राजानन्तु कुरुश्रेष्ठं ते हंससधुरस्वराः । आश्वासयन्तो विप्राग्र्याः क्षपां सर्व्वां व्यनोदयन् ।
इति श्रीमहाभारते आरण्यकेपर्व्वणि आरण्यपर्व्वणि पौरप्रत्यागमने प्रथमो ऽध्यायः ॥ १ ॥

॥ वैशम्पायन उवाच ॥ प्रभातायान्तु शर्व्वर्य्यां तेषमक्लिष्टकर्म्मणां । वनं यियासतां विप्रास्तस्थुर्भिक्षाभुजो ऽग्रतः ।
तानुवाच ततो राजा कुन्तीपुत्त्रो युधिष्ठिरः । वयं हि हृतसर्व्वस्वा हृतराज्या हृतश्रियः ।
फलमूलामिषाहारा वनं गच्छाम दुःखिताः । वनञ्च दोषबहुलं बहुव्यालसरीसृपं ।
परिक्लेशश्च वो मन्ये ध्रुवं तत्र भविष्यति । ब्राह्मणानां परिक्लेशो दैवतान्यपि सादयेत् । १०
किं पुनर्म्मामितो विप्रा निवर्त्तध्वं यथेष्टतः ॥ ब्राह्मणा ऊचुः । गतिर्या भवतां राजन् वयं हि गन्तुमुद्यताः ।
नार्हस्यस्मान् परित्यक्तुं भक्तान् सद्धर्म्मदर्शिनः । अनुकम्पां हि भक्तेषु देवता ह्यपि कुर्व्वते ।
विशेषतो ब्राह्मणेषु सदाचारावलम्बिषु ॥ युधिष्ठिर उवाच ॥ ममापि परमा भक्तिर्ब्राह्मणेषु सदा द्विजाः ।
सहायविपरिभ्रंशस्त्वयं सादयतीव मां । आहरेयुरिमे येऽपि फलमूलमृगांस्तथा ।
त इमे शोकजैर्दुःखैर्भ्रातरो मे विमोहिताः । द्रौपद्या विप्रकर्षेण राज्यापहरणेन च । १५
दुःखार्द्दितानिमान् क्लेशैर्नाहं योक्तुमिहोत्सहे ॥ ब्राह्मणा ऊचुः । अस्मत्पोषणजा चिन्ता माभूत्ते हृदि पार्थिव ।
स्वयमाहृत्य चान्नानि उपयोक्ष्यामहे वयं । अनुध्यानेन जप्येन विधास्यामः शिवं तव ।
कथाभिश्चाभिरम्याभिः सह रंस्यामहे वयं ॥ युधिष्ठिर उवाच ॥ एवमेतन्न सन्देहो रमेऽहं सततं द्विजैः ।
न्यूनभावात्तु पश्यामि प्रत्यादेशमिवात्मनः । कथं द्रक्ष्यामि वः सर्व्वान् स्वयमाहृत्य भोजिनः ।
मद्भक्त्या क्लिश्यतोऽनर्हान् धिक्पापान् धृतराष्ट्रजान् ॥ वैशम्पायन उवाच ॥ इत्युक्त्वा स नृपः शोचन् निषसाद महीतले । २०
तमध्यात्मरतो विद्वान् शौनको नाम वै द्विजः । योगे सांख्ये च कुशलो राजानमिदमब्रवीत् ।
शोकस्थानसहस्राणि भयस्थानशतानि च । दिवसे दिवसे मूढमाविशन्ति न पण्डितं ।
नहि ज्ञानविरुद्धेषु बहुदोषेषु कर्म्मसु । श्रेयोघातिषु सज्जन्ते बुद्धिमन्तो भवद्विधाः ।
अष्टाङ्गां बुद्धिमाहुर्य्यां सर्व्वाश्रेयोऽभिघातिनीं । श्रुतिस्मृतिसमायुक्तां राजन् सा त्वय्यवस्थिता ।
अर्थकृच्छ्रेषु दुर्गेषु व्यापत्सु स्वजनस्य च । शारीरमानसैर्दुःखैर्न सीदन्ति भवद्विधाः । २५
श्रूयताञ्चाभिधास्यामि जनकेन यथा पुरा । आत्मव्यवस्थानकरा गीताः श्लोका महात्मना ।
मनोदेहसमुत्थाभ्यां दुःखाभ्यामर्द्दितं जगत् । तयोर्व्याससमासाभ्यां शमोपायमिमं शृणु ।
व्याधेरनिष्टसंस्पर्शात् श्रमादिष्टविवर्ज्जनात् । दुःखं चतुर्भिः शारीरं कारणैः संप्रवर्त्तते ।
तदा तत्प्रतिकाराच्च सततं वाऽविचिन्तनात् । आधिव्याधिप्रशमनं क्रियायोगद्वयेन च ।
मतिमन्तो ह्यतो वैद्याः शमं प्रागेव कुर्व्वते । मानसस्य प्रियाख्यानैः सम्भोगोपनयैर्नृणां । ३०
मानसेन हि दुःखेन शरीरमुपतप्यते । अयःपिण्डेन तप्तेन कुम्भसंस्थमिवोदकं ।
मानसं शमयेत्तस्माज्ज्ञानेनाग्निमिवाम्बुना । प्रशान्ते मानसे ह्यस्य शारीरमुपशाम्यति ।
मनसो दुःखमूलन्तु स्नेह इत्युपलभ्यते । स्नेहात्तु सज्जते जन्तुर्दुःखयोगमुपैति च ।
स्नेहमूलानि दुःखानि स्नेहजानि भयानि च । शोकहर्षौ तथायासः सर्व्वं स्नेहात् प्रवर्त्तते ।
स्नेहाद्भावोऽनुरागश्च प्रजज्ञे विषये तथा । अश्रेयस्कावुभावेतौ पूर्व्वस्तत्र गुरुः स्मृतः । ३५
कोटराग्निर्य्यथाऽशेषं समूलं पादपं दहेत् । धर्म्मार्थौ तु तथाल्पोऽपि रागदोषो विनाशयेत् ।

विप्रयोगे न तु त्यागी दोषदर्शी समागमे। विरागं भजते जन्तुर्निर्वैरो निरवग्रहः।
तस्मात् स्नेहं न लिप्सेत मित्रेभ्यो धनसञ्चयात्। स्वशरीरसमुत्थञ्च ज्ञानेन विनिवर्त्तयेत्।
ज्ञानान्वितेषु युक्तेषु शास्त्रज्ञेषु कृतात्मसु। न तेषु सज्जते स्नेहः पद्मपत्रेष्विवोदकं।
रागाभिभूतः पुरुषः कामेन परिकृष्यते। इच्छा संजायते तस्य ततस्तृष्णा विवर्द्धते।
तृष्णा हि सर्व्वपापिष्ठा नित्योद्वेगकरी स्मृता। अधर्म्मबहुला चैव घोरा पापानुबन्धिनी।
या दुस्त्यजा दुर्म्मतिभिर्या न जीर्य्यति जीर्य्यतः। योऽसौ प्राणान्तिको रोगस्तां तृष्णां त्यजतः सुखं।
अनाद्यन्ता तु सा तृष्णा अन्तर्देहगता नृणां। विनाशयति भूतानि अयोनिज इवानलः
यथैधः स्वसमुत्थेन वह्निना नाशमृच्छति। तथाऽकृतात्मा लोभेन सहजेन विनश्यति।
राजतः सलिलादग्नेश्चौरतः स्वजनादपि। भयमर्थवतां नित्यं मृत्योः प्राणभृतामिव।
यथा ह्यामिषमाकाशे पक्षिभिः श्वापदैर्भुवि। भक्ष्यते सलिले मत्स्यैस्तथा सर्व्वत्र वित्तवान्।
अर्थ एव हि केषाञ्चिदनर्थं भजते नृणां। अर्थश्रेयसि चासक्तो न श्रेयो विन्दते नरः।
तस्मादर्थागमाः सर्व्वे लोभमोहविवर्द्धनाः। कार्पण्यं दर्पमानौ च भयमुद्वेग एव च।
अर्थजानि विदुः प्राज्ञा दुःखान्येतानि देहिनां। अर्थस्योत्पादने चैव पालने च तथा क्षये।
सहन्ति च महद्दुःखं घ्नन्ति चैवार्थकारणात। अर्थाद्दुःखं परित्यक्तुं पालिताश्चैव शत्रवः।
दुःखेन चाधिगम्यन्ते तस्मान्नाशं न चिन्तयेत्। असन्तोषपरा मूढाः सन्तोषं यान्ति पण्डिताः।
अन्तो नास्ति पिपासायाः सन्तोषः परमं सुखं। तस्मात् सन्तोषमेवेह परं पश्यन्ति पण्डिताः।
अनित्यं यौवनं रूपं जीवितं रत्नसञ्चयः। ऐश्वर्य्यं प्रियसंवासो गृध्येत्तत्र न पण्डितः।
त्यजेत सञ्चयांस्तस्मात्तज्जान् क्लेशान् सहेत च। न हि सञ्चयवान् कश्चिद्दृश्यते निरुपद्रवः। अतश्च धार्म्मिकैः पुम्भिरनीहार्थः प्रशस्यते।
धर्म्मार्थं यस्य वित्तेहा वरन्तस्य निरीहता। प्रक्षालनाद्धि पङ्कस्य श्रेयो न स्पर्शनं नृणां।
युधिष्ठिरैवं सर्व्वेषु न स्पृहां कर्त्तुमर्हसि। धर्म्मेण यदि ते कार्य्यं विमुक्तेच्छो भवार्थतः।
॥ युधिष्ठिर उवाच ॥ नार्थोपभोगलिप्सार्थमियमर्थेप्सुता मम। भरणार्थन्तु विप्राणां ब्रह्मन् काङ्क्षे न लोभतः।
कथमस्मद्विधो ब्रह्मन् वर्त्तमानो गृहाश्रमे। भरणं पालनं वाऽपि न कुर्य्यादनुयायिनां।
संविभागो हि भूतानां सर्व्वेषामेव दृश्यते। तथैवापचमानेभ्यः प्रदेयं गृहमेधिना।
तृणानि भूमिरुदकं वाक्चतुर्थी च सूनृता। सतामेतानि गेहेषु नोच्छिद्यन्ते कदाचन।
देयमार्त्तस्य शयनं स्थितः श्रान्तस्य चासनं। तृषितस्य च पानीयं क्षुधितस्य च भोजनं।
चक्षुर्द्दद्यान्मनो दद्याद्वाचं दद्यात् सुभाषितां। उत्थाय चासनं दद्यादेष धर्म्मः सनातनः।
प्रत्युत्थायाभिगमनं कुर्य्यान्न्यायेन चार्च्चनां। अग्निहोत्रमनड्वांश्च ज्ञातयोऽतिथिबान्धवाः।
पुत्रा दाराश्च भृत्याश्च निर्द्दहेयुरपूजिताः। आत्मने पाचयेन्नान्नं न वृथा घातयेत् पशून्। न च तत् स्वयमश्नीयाद्विधिवद्यन्न निर्व्वपेत्।

श्वभ्यश्च श्वपचेभ्यश्च वयोभ्यश्चावपेद्भुवि। वैश्वदेवं हि नामैतत् सायं प्रातश्च दीयते। १०५
विघसाशी भवेत्तस्मान्नित्यञ्चामृतभोजनः। विघसो भुक्तशेषन्तु यज्ञशेषं तथाऽमृतं।
चक्षुर्द्द्यान्मनो दद्याद्वाचं दद्याच्च सूनृतां। अनुव्रजेदुपासीत स यज्ञः पञ्चदक्षिणः।
यो दद्यादपरिक्लिष्टमन्नमध्वनि वर्त्तते। श्रान्तायादृष्टपूर्व्वाय तस्य पुण्यफलं महत्।
एवं यो वर्त्तते वृत्तिं वर्त्तमानो गृहाश्रमे। तस्य धर्म्मं परं प्राहुः कथं वा विप्र मन्यसे।
॥ शौनक उवाच ॥ अहो बत महत्कष्टं विपरीतमिदं जगत्। येनापत्रपते साधुरसाधुस्तेन तुष्यति। ११०
शिश्नोदरकृतेऽप्राज्ञः करोति विघसं बहु। मोहरागवशाक्रान्त इन्द्रियार्थवशानुगः।
ह्रियते बुध्यमानोऽपि नरो हारिभिरिन्द्रियैः। विमूढसंज्ञो दुष्टाश्वैरुद्भ्रान्तैरिव सारथिः।
षडिन्द्रियाणि विषयं समागच्छन्ति वै यदा। तदा प्रादुर्भवत्येषां पूर्व्वसङ्कल्पजं मनः।
मनो यस्येन्द्रियस्येह विषयान् याति सेवितुं। तस्यौत्सुक्यं सम्भवति प्रवृत्तिश्चोपजायते।
ततः सङ्कल्पवीजेन कामेन विषयेषुभिः। विद्धः पतति लोभाग्नौ ज्योतिर्लोभात् पतङ्गवत्। ११५
ततो विहारैराहारैर्मोहितश्च यथेप्सया। महामोहे सुखे मग्नो नात्मानमवबुध्यते।
एवं पतति संसारे तासु तास्विह योनिषु। अविद्याकर्म्मतृष्णाभिर्भ्राम्यमाणोऽथ चक्रवत्।
ब्रह्मादिषु तृणान्तेषु भूतेषु परिवर्त्तते। जले भुवि तथाकाशे जायमानः पुनः पुनः।
अबुधानां गतिस्त्वेषा बुधानामपि मे शृणु। ये धर्म्मे श्रेयसि रता विमोक्षरतयो जनाः।
तदिदं वेदवचनं कुरु कर्म्म त्यजेति च। तस्माद्धर्म्मानिमान् सर्व्वान्नाभिमानात् समाचरेत्। १२०
इज्याध्ययनदानानि तपः सत्यं क्षमा दमः। अलोभ इति मार्गोऽयं धर्म्मस्याष्टविधः स्मृतः।
अत्र पूर्व्वश्चतुर्व्वर्गः पितृयानपथे स्थितः। कर्त्तव्यमिति यत्कार्य्यं नाभिमानात् समाचरेत्।
उत्तरो देवयानस्तु सद्भिराचरितः सदा। अष्टाङ्गेनैव मार्गेण विशुद्धात्मा समाचरेत्।
सम्यक्सङ्कल्पसम्बन्धात् सम्यक्चेन्द्रियनिग्रहात्। सम्यग्व्रतविशेषाच्च सम्यक्च गुरुसेवनात्।
सम्यगाहारयोगाच्च सम्यक्चाध्ययनागमात्। सम्यक्कर्म्मोपसंन्यासात् सम्यक् चित्तनिरोधनात्। १२५
एवं कर्म्माणि कुर्व्वन्ति संसारविजिगीषवः। रागद्वेषविनिर्म्मुक्ता ऐश्वर्य्यं देवता गताः।
रुद्राः साध्यास्तथादित्या वसवोऽथ तथाऽश्विनौ। योगैश्वर्य्येण संयुक्ता धारयन्ति प्रजा इमाः।
तथा त्वमपि कौन्तेय शममास्थाय पुष्कलं। तपसा सिद्धिमन्विच्छ योगसिद्धिञ्च भारत।
पितृमातृमयी सिद्धिः प्राप्ता कर्म्ममयी च ते। तपसा सिद्धिमन्विच्छ द्विजानां भरणाय वै।
सिद्धा हि यद्यदिच्छन्ति कुर्व्वते तदनुग्रहात्। तस्मात्तपः समास्थाय कुरुष्वात्ममनोरथं। १३०
इति श्रीमहाभारते आरण्यपर्व्वणि आरण्यके पर्व्वणि पाण्डवानां प्रव्रजने नाम द्वितीयोऽध्यायः ॥ २ ॥
॥ वैशम्पायन उवाच ॥ शौनकेनैवमुक्तस्तु कुन्तीपुत्रो युधिष्ठिरः। पुरोहितमुपागम्य भ्रातृमध्येऽब्रवीदिदं।
प्रस्थितं माऽनुयान्तीमे ब्राह्मणा वेदपारगाः। न चास्मि पोषणे शक्तो बहुदुःखसमन्वितः।
परित्यक्तुं न शक्तोऽस्मि दानशक्तिश्च नास्ति मे। कथमत्र मया कार्य्यं प्रब्रूहि भगवन्मम।

॥ वैशम्पायन उवाच ॥ मुहूर्त्तमिव स ध्यात्वा धर्म्मेणान्विष्य तां गतिं। युधिष्ठिरमुवाचेदं धौम्यो धर्म्मभृताम्बरः।
॥ धौम्य उवाच ॥ पुरा सृष्टानि भूतानि पीड्यन्ते क्षुधया भृशं। ततोऽनुकम्पया तेषां सविता स्वपिता यथा॥ १३५
गत्वोत्तरायणं तेजोरसानुद्धृत्य रश्मिभिः। दक्षिणायनमावृत्तो महीं निविशते रविः।
क्षेत्रभूते ततस्तस्मिन् ओषधीरोषधीपतिः। दिवस्तेजः समुद्धृत्य जनयामास वारिणा।
निषिक्तश्चन्द्रतेजोभिः स्वयोनौ निर्गते रविः। ओषध्यः षड्रसा मेध्यास्तदन्नं प्राणिनां भुवि।
एवं भानुमयं ह्यन्नं भूतानां प्राणधारणं। पितैष सर्व्वभूतानां तस्मात्तं शरणं व्रज।
राजानो हि महात्मानो योनिकर्म्मविशोधिताः। उद्धरन्ति प्रजाः सर्व्वास्तप आस्थाय पुष्कलं। १४०
भीमेन कार्त्तवीर्य्येण वैन्येन नहुषेण च। तपोयोगसमाधिस्थैरुद्धृता ह्यापदः प्रजाः।
तथा त्वमपि धर्म्मात्मन् कर्म्मणा च विशोधितः। तप आस्थाय धर्म्मेण द्विजातीन् भर भारत।
॥ जनमेजय उवाच ॥ कथं कुरूणामृषभः स तु राजा युधिष्ठिरः। विप्रार्थमाराधितवान् सूर्य्यमद्भुतदर्शनं।
॥ वैशम्पायन उवाच ॥ शृणुष्वावहितो राजन् शुचिर्भूत्वा समाहितः। क्षणञ्च कुरु राजेन्द्र संप्रवक्ष्याम्यशेषतः।
धौम्येन तु यथापूर्व्वं पार्थाय सुमहात्मने। नामाष्टशतमाख्यातं तच्छृणुष्व महामते। १४५
॥ धौम्य उवाच ॥ सूर्य्योऽर्य्यमा भगस्त्वष्टा पूषाऽर्कः सविता रविः। गभस्तिमानजः कालो मृत्युर्धाता प्रभाकरः।
पृथिव्यापश्च तेजश्च खं वायुश्च परायणं। सोमो बृहस्पतिः शुक्रो बुधोऽङ्गारक एव च।
इन्द्रो विवस्वान् दीप्तांशुः शुचिः शौरिः शनैश्चरः। ब्रह्मा विष्णुश्च रुद्रश्च स्कन्दो वै वरुणो यमः।
वैद्युतो जाठरश्चाग्निरैन्धनस्तेजसां पतिः। धर्म्मध्वजो वेदकर्त्ता वेदाङ्गो वेदवाहनः।
कृतं त्रेता द्वापरश्च कलिः सर्व्वमलाश्रयः। कला काष्ठा मुहूर्त्ताश्च क्षपा यामस्तथा क्षणः। १५०
संवत्सरकरोऽश्वत्थः कालचक्रो विभावसुः। पुरुषः शाश्वतो योगी व्यक्ताव्यक्तः सनातनः।
कालाध्यक्षः प्रजाध्यक्षो विश्वकर्म्मा तमोनुदः। वरुणः सागरोंऽशश्च जीमूतो जीवनोऽरिहा।
भूताश्रयो भूतपतिः सर्व्वलोकनमस्कृतः। स्रष्टा संवर्त्तको वह्निः सर्व्वस्यादिरलोलुपः।
अनन्तः कपिलो भानुः कामदः सर्व्वतोमुखः। जयो विशालो वरदः सर्व्वधातुनिषेचिता।
मनः सुपर्णो भूतादिः शीघ्रगः प्राणधारणः। धन्वन्तरिर्धूमकेतुरादिदेवो दितेः सुतः। १५५
द्वादशात्माऽरविन्दाक्षः पिता माता पितामहः। स्वर्गद्वारं प्रजाद्वारं मोक्षद्वारं त्रिविष्टपं।
देहकर्त्ता प्रशान्तात्मा विश्वात्मा विश्वतोमुखः। चराचरात्मा सूक्ष्मात्मा मैत्रेयः करुणान्वितः।
एतद्वै कीर्त्तनीयस्य सूर्य्यस्यामिततेजसः। नामाष्टशतकञ्चेदं प्रोक्तमेतत् स्वयम्भुवा।
सुरगणपितृयक्षसेवितं ह्यसुरनिशाचरसिद्धवन्दितं। वरकनकहुताशनप्रभं प्रणिपतितोऽस्मि हिताय भास्करं।
सूर्य्योदये यः सुसमाहितः पठेत् स पुत्त्रदारान् धनरत्नसञ्चयान्। लभेत जातिस्मरतां नरः सदा धृतिञ्च मेधाञ्च स विन्दते पुमान्। १६०
इमं स्तवं देववरस्य मानवः प्रकीर्त्तयेच्छुचिसुमनाः समाहितः। विमुच्यते शोकदवाग्निसागराल्लभेत कामान्मनसा यथेप्सितान्।

॥ वैशम्पायन उवाच ॥ एवमुक्तस्तु धौम्येन तत्कालसदृशं वचः। विप्रत्यागसमाधिस्थः संयतात्मा दृढव्रतः।
धर्म्मराजो विशुद्धात्मा तपस्तातिष्ठदुत्तमं। पुष्पोपहारैर्ब्बलिभिरर्च्चयित्वा दिवाकरं।
सोऽवगाह्य जलं राजा देवस्याभिमुखोऽभवत्। योगमास्थाय धर्म्मात्मा वायुभक्षो जितेन्द्रियः।
गाङ्गेयं पर्य्युपस्पृश्य प्राणायामेन तस्थिवान्। शुचिःप्रयतवाग्भूत्वा स्तोत्रमारब्धवांस्ततः। १९५
॥ युधिष्ठिर उवाच ॥ त्वं भानो जगतश्चक्षुस्त्वमात्मा सर्व्वदेहिनां। त्वं योनिः सर्व्वभूतानां त्वमाचारः क्रियावतां।
त्वं गतिः सर्व्वसांख्यानां योगिनां त्वं परायणं। अनावृतार्गलद्वारं त्वं गतिस्त्वं मुमुक्षतां।
त्वया संधार्य्यते लोकस्त्वया लोकः प्रकाश्यते। त्वया पवित्रीक्रियते निर्व्याजं पाल्यते त्वया।
त्वामुपस्थाय काले तु ब्राह्मणा वेदपारगाः। स्वशाखाविहितैर्म्मन्त्रैरर्च्चन्त्यृषिगणार्च्चितं।
तव दिव्यं रथं यान्तमनुयान्ति वरार्थिनः। सिद्धचारणगन्धर्व्वा यक्षगुह्यकपन्नगाः। २००
त्रयस्त्रिंशच्च वै देवास्तथा वैमानिका गणाः। सोपेन्द्राः समहेन्द्राश्च त्वामिष्ट्वा सिद्धिमागताः।
उपयान्त्यर्च्चयित्वा तु त्वां वै प्राप्तमनोरथाः। दिव्यमन्दारमालाभिस्तूर्णं विद्याधरोत्तमाः।
गुह्याः पितृगणाः सप्त ये दिव्या ये च मानुषाः। ते पूजयित्वा त्वामेव गच्छन्त्याशुप्रधानतां।
वसवो मरुतो रुद्रा ये च साध्या मरीचिपाः। बालिखिल्यादयः सिद्धाः श्रेष्ठत्वं प्राणिनां गताः।
सब्रह्मकेषु लोकेषु सप्तस्वप्यखिलेषु च। न तद्भूतमहं मन्ये यदर्कादतिरिच्यते। २०५
सन्ति चान्यानि सत्त्वानि वीर्य्यवन्ति महान्ति च। न तु तेषां तथा दीप्तिः प्रभावो वा यथा तव।
ज्योतींषि त्वयि सर्व्वाणि त्वं सर्व्वज्योतिषां पतिः। त्वयि सत्यञ्च सत्त्वञ्च सर्व्वे भावाश्च सात्त्विकाः।
त्वत्तेजसा कृतञ्चक्रं सुनाभं विश्वकर्म्मणा। देवारीणां मदो येन नाशितः शार्ङ्गधन्वना।
त्वमादायांशुभिस्तेजो निदाघे सर्व्वदेहिनां। सर्व्वौषधिरसानाञ्च पुनर्व्वर्षासु मुञ्चसि।
तपन्त्यन्ये दहन्त्यन्ये गर्ज्जन्त्यन्ये तथा घनाः। विद्योतन्ते प्रवर्षन्ति तव प्रावृषि रश्मयः। २१०
न तथा सुखयत्यग्निर्न प्रावारा न कम्बलाः। शीतवातार्द्दितं लोकं यथा तव मरीचयः।
त्रयोदशद्वीपवतीं गोभिर्भासयसे महीं। त्रयाणामपि लोकानां हितायैकः प्रवर्त्तसे।
तव यद्युदयो न स्यादन्धं जगदिदं भवेत्। नच धर्म्मार्थकामेषु प्रवर्त्तेरन्मनीषिणः।
आधानपशुबन्धेष्टिमन्त्रयज्ञतपःक्रियाः। त्वत्प्रसादादवाप्यन्ते ब्रह्मक्षत्त्रविशां गणैः।
यदहो ब्रह्मणः प्रोक्तं सहस्रयुगसम्मितं। तस्य त्वमादिरन्तश्च कालज्ञैः परिकीर्त्तितः। २१५
मनूनां मनुपुत्त्राणां जगतो मानवस्य च। मन्वन्तराणां सर्व्वेषामीश्वराणां त्वमीश्वरः।
संहारकाले सम्प्राप्ते तव क्रोधविनिःसृतः। सम्वर्त्तकाग्निस्त्रैलोक्यं भस्मीकृत्वाऽवतिष्ठते।
त्वद्दीधितिसमुत्पन्ना नानावर्णा महाघनाः। सैरावताः साशनयः कुर्व्वन्त्याभूतसंप्लवं।
कृत्वा द्वादशधात्मानं द्वादशादित्यतां गतः। संहृत्यैकार्णवं सर्व्वं त्वं शोषयसि रश्मिभिः।
त्वामिन्द्रमाहुस्त्वं विष्णुस्त्वं रुद्रस्त्वं प्रजापतिः। त्वमग्निस्त्वं मनःसूक्ष्मं प्रभुस्त्वं ब्रह्म शाश्वतं। २२०
त्वं हंसः सविता भानुरंशुमाली वृषाकपिः। विवस्वान्मिहिरः पूषा मित्रो धर्म्मस्तथैव च।

सहस्ररश्मिरादित्यस्तपनस्त्वं गवाम्पतिः । मार्त्तण्डोऽर्क्को रविः सूर्य्यः शरण्यो दिनकृत्तथा ।
दिवाकरः सप्तसप्तिर्धामकेशी विरोचनः । आशुगामी तमोघ्नश्च हरिताश्वश्च कीर्त्यसे ।
सप्तम्यामथ वा षष्ठ्यां भक्त्या पूजां करोति यः । अनिर्व्विस्रोऽनहंकारी तं लक्ष्मीर्भजते नरं ।
न तेषामापदः सन्ति नाधयो व्याधयस्तथा । ये तवानन्यमनसः कुर्व्वते ह्यभिवन्दनं । १९९
सर्व्वरोगैर्व्विरहिताः सर्व्वपापविवर्ज्जिताः । त्वद्भावभक्ताः सुखिनो भवन्ति चिरजीविनः ।
त्वं ममाप्यन्नकामस्य सर्व्वातिथ्यं चिकीर्षतः । अन्नमन्नपते दातुमभितः श्रद्धयाऽर्हसि ।
ये च तेऽनुचराः सर्व्वे पादोपान्तं समाश्रिताः । माठरारुणदण्डाद्यास्तांस्तान् वन्दे ऽशनिक्षुभान् ।
क्षुभया सहिता मैत्री याश्चान्या भूतमातरः । ताश्च सर्व्वा नमस्यामि पान्तु मां शरणागतं ।
॥ वैशम्पायन उवाच ॥ ततो दिवाकरः प्रीतो दर्शयामास पाण्डवं । दीप्यमानः स्ववपुषा ज्वलन्निव हुताशनः । २००
॥ विवस्वानुवाच ॥ यत्तेऽभिलषितं किञ्चित्त्वं सर्व्वमवाप्स्यसि । अहमन्नं प्रदास्यामि सप्तपञ्च च ते समाः ।
गृह्णीष्व पिठरं ताम्रं मया दत्तं नराधिप । यावद्वर्त्स्यति पाञ्चाली पात्रेणानेन सुव्रत ।
फलमूलामिषं शाकं संस्कृतं यन्महानसे । चतुर्व्विधं तदन्नाद्यमक्षय्यन्ते भविष्यति ।
इतश्चतुर्दशे वर्षे भूयो राज्यमवाप्स्यसि ॥ वैशम्पायन उवाच ॥ एवमुक्त्वा तु भगवांस्तत्रैवान्तरधीयत ।
इमं स्तवं प्रयतमनाः समाधिना पठेदिहान्योऽपि वरं समर्थयन् । तत्तस्य दद्याच्च रविर्मनीषितं तदाप्नुयाद्यद्यपि तत् सुदुर्लभं । २०५
यश्चेदं धारयेन्नित्यं शृणुयाद्वाऽप्यभीक्ष्णशः । पुत्त्रार्थी लभते पुत्त्रं धनार्थी लभते धनं ।
विद्यार्थी लभते विद्यां पुरुषोऽप्यथ वा स्त्रियः । उभे सन्ध्ये पठेन्नित्यं नारी वा पुरुषो यदि ।
आपदं प्राप्य मुच्येत बद्धो मुच्येत बन्धनात् । एतद्ब्रह्मा ददौ पूर्व्वं शक्राय सुमहात्मने ।
शक्राच्च नारदः प्राप्तो धौम्यस्तु तदनन्तरं । धौम्याद्युधिष्ठिरः प्राप्य सर्व्वान् कामानवाप्तवान् ।
संग्रामे च जयेन्नित्यं विपुलञ्चाप्नुयाद्वसु । मुच्यते सर्व्वपापेभ्यः सूर्य्यलोकं स गच्छति । २१०
॥ वैशम्पायन उवाच ॥ लब्ध्वा वरन्तु कौन्तेयो जलादुत्तीर्य्य धर्म्मवित् । जग्राह पादौ धौम्यस्य भ्रातॄंश्च परिषस्वजे ।
द्रौपद्या सह सङ्गम्य वन्द्यमानस्तया प्रभो । महानसे तदानीन्तु साधयामास पाण्डवः ।
संस्कृतं प्रसवं याति स्वल्पमन्नञ्चतुर्व्विधं । अक्षय्यं वर्द्धते चान्नं तेन भोजयते द्विजान् ।
भुक्तवत्सु च विप्रेषु भोजयित्वाऽनुजानपि । शेषं विघससंज्ञन्तु पश्चाद्भुङ्क्ते युधिष्ठिरः ।
युधिष्ठिरं भोजयित्वा शेषमश्नाति पार्षती । द्रौपद्यां भुज्यमानायां तदन्नं क्षयमेति च । २१५
एवं दिवाकरात् प्राप्य दिवाकरसमप्रभः । कामान् मनोऽभिलषितान् ब्राह्मणेभ्योऽददात् प्रभुः ।
पुरोहितपुरोगाश्च तिथिनक्षत्रपर्व्वसु । यज्ञियार्थाः प्रवर्त्तन्ते विधिमन्त्रप्रमाणतः ।
ततः कृतस्वस्त्ययना धौम्येन सह पाण्डवाः । द्विजसंघैः परिवृताः प्रययुः काम्यकं वनं ।
इति श्रीमहाभारते आरण्यपर्व्वणि आरण्यकपर्व्वणि काम्यवनप्रवेशे तृतीयोऽध्यायः ॥ ३ ॥

